# रुद्रपाठन्यासः

श्रीगणेशाय नमः ।। अथ कर्ता यजमानः (ब्राह्मणो वा) आचम्यप्राणनायम्य षडङ्गन्यासान् कुर्यात् ।।

तत्र क्रमः – अद्यपूर्वोच्चारित एवं गुणविशेषेण विशिष्टायां शुभपुण्य तिथौ मम आत्मनः (यजमानस्य वा) सकल शास्त्रश्रुतिस्मृतिपुराणोक्त फलप्राप्त्यर्थं, धर्मार्थकाममोक्षफलसिद्ध्यर्थं सर्वव्याधिनिवारणार्थं सर्वा-भीष्टसिद्ध्यर्थं अमुककामनासिद्ध्यर्थं वा अमुक द्रव्येण जलधारया वा श्रीभवानीशङ्करदेवताप्रीत्यर्थं, अमुक रुद्राभिषेकमहं करिष्ये ।। तदङ्गतया विहितान् शरीरशुद्ध्यर्थं लघुषडङ्गन्यासांश्च करिष्ये ।।

हृदयादिन्यासः – मनोजूतिरिति मन्त्रस्य बृहस्पतिर्ऋषिः बृहस्पतिर्देवता बृहतीछन्दः हृदयन्यासे जपे विनियोगः ।।

ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्टँय्यज्ञꣳ समिमन्दधातु ॥ व्विश्श्वेदेवासऽइहमादयन्तामो॥ ३म्प्रतिष्ठ ॥ ॐ हृदयाय नमः॥१॥

अबोध्यग्निरिति मन्त्रस्य बुधगविष्ठिरऽऋषिः अग्निर्देवता त्रिष्टुप्छन्दः शिरोन्यासे जपे विनियोगः ।।

ॐ अबोध्ध्यग्ग्निः समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् ॥ यह्वाऽइवप्प्रवयामुज्जिहानाः प्रभानवः सिस्त्रतेनाकमच्छ॥ ॐ शिरसे स्वाहा ॥२

मूर्द्धानमिति मन्त्रस्य भरद्वाज ऋषिः अग्निर्देवता त्रिष्टुप्छन्दः शिखान्यासे जपे विनियोगः ।।

ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्व्या व्वैश्श्वानरमृतऽआजातमग्ग्निम् ॥ कविꣳ सम्म्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः । ॐ शिखायै वषट्॥३

मर्माणित इति मन्त्रस्य अप्रतिरथऋषिः मर्माणि देवता विराट् छन्दः कवचन्यासे जपे विनियोगः ।।

ॐ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्त्ताम् ॥ उरोर्व्वरीयोव्वरुणस्त्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥ ॐ कवचाय हुम् ॥४॥

विश्वतश्चक्षुरिति मन्त्रस्य विश्वकर्मा भौवन ऋषिः विश्वकर्मा देवता त्रिष्टुप्छन्दः नेत्रन्यासे जपे विनियोगः ।।

ॐ व्विश्वतश्चक्षुरुतव्विश्श्वतोमुखोव्विश्श्वतोबाहुरुतव्विश्श्वतस्प्यात् ॥ सम्बाहुब्भ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ ॐ नेत्रत्रयाय वौषट् ॥५॥

मानस्तोक इति मन्त्रस्य परमेष्ठी ऋषिः एक रुद्रो देवता जगतीछन्दः

अस्त्रन्यासे जपे विनियोगः ।।

ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषः ॥ मानोंव्वीरान्नुद्रभामिनौव्वधीर्हविष्मन्तःसदमित्त्वाहवामहे ॥ ॐ अस्त्राय फट् ॥६॥

ध्यान– ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारु चन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ।।

ॐ नमः पार्वतीपतये हर !

श्रीगणेशाय नमः ॥ हरिः ॐ गणानान्त्वागणपतिꣳहवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳहवामहेव्वसोमम ॥ आहमं

जानिगर्ब्भधमात्त्वमजासिगर्ब्भधम् ॥१॥ गायत्रीत्रिष्टुब्ब्जगत्त्यनुष्टुप्पङ्क्त्यासह ॥ बृहत्त्युष्णिणहाककुप्सूचीभिःशम्म्यन्तुत्त्वा ॥२॥ द्विपदायाश्चतुष्प्पदास्त्रिपदायाश्चषट्ट्पदाः ॥ विच्छन्दायाश्चसच्छन्दाः सूचीभिःशम्म्यन्तुत्त्वा ॥३॥ सहस्तोमाःसहछन्दसऽआवृतःसहप्प्रमाऽऋषयःसप्प्तदैव्व्याः ॥ पूर्व्वेषाम्पन्थामनुदृश्श्यधीराऽअन्वालेभिरेरत्थ्यो नरश्म्मीन् ॥४॥ यज्जाग्ग्रतोदूरमुदैतिदैवन्तदुसुप्प्तस्यतथैवैति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्न्मेमनःशिवसङ्कल्प्पमस्तु ॥५॥ येनकर्म्माण्यपसोमनीषिणोयज्ञेकृण्ण्वन्तिविदथेषुधीराः ॥ यदपूर्व्वंय्यक्षमन्तःप्प्रजानान्तन्न्मेमनःशिवसङ्कल्प्पमस्तु ॥६॥ यत्प्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृतम्प्रजासु ॥ यस्म्मान्नऽऋतेकिञ्चनकर्म्मक्क्रियतेतन्न्मेमनःशिवसङ्कल्प्पमस्तु ॥७॥ येनेदम्भूतम्भुवनम्भविष्ष्यत्त्परिगृहीतममृतेनसर्व्वम् ॥

येनयज्ञस्तायतेसप्तहोतातन्मेमनःशिवसङ्कल्पमस्तु ॥८॥ यस्मिन्नृचः सामयजूꣳषियस्मिन्प्रतिष्ठितारथनाभाविवाराः ॥ यस्मिꣳश्चित्तꣳसर्व्वमोतम्प्रजानान्तन्मेमनःशिवसङ्कल्पमस्तु ॥९॥ सुषारथिरश्वानिवयन्मनुष्यान्नेनीयतेभीशुभिर्व्वाजिनइव ॥ हृत्प्रतिष्ठंयदजिरञ्जविष्ठन्तन्मेमनः शिवसङ्कल्पमस्तु ॥१०॥

इतिश्रीरुद्रे प्रथमोऽध्यायः ॥१॥

हरिःॐ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिꣳसर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥ पुरुषएवेदꣳसर्व्वँय्यद्भूतँय्यच्चभाव्यम् ॥ उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥२॥ एतावानस्यमहिमातोज्ज्यायाँश्चपूरुषः ॥ पादोस्यव्विश्वाभूतानित्रिपादस्यामृतन्दिवि ॥३॥

त्रिपादूर्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्सा
शनानशनेऽअभि ॥४॥ ततोविराडजायतविराजोऽअधिपूरुषः ॥ सजातोऽ
अत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥५॥ तस्माद्यज्ञात्सर्वहुतः सम्भृ
तम्पृषदाज्यम् ॥ पशूँस्ताँश्चक्रेवायव्यानारण्याग्राम्याश्चये ॥६॥
तस्माद्यज्ञात्सर्वहुतऽऋचः सामानिजज्ञिरे ॥ छन्दाꣳसिजज्ञिरेतस्मा
द्यजुस्तस्मादजा[illegible] ॥७॥ तस्मादश्वाऽअजायन्तयेकेचोभयादतः ॥
गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥८॥ तंयज्ञम्बर्हिषिप्रौ
क्षन्पुरुषञ्जातमग्रतः ॥ तेनदेवाऽअयजन्तसाध्याऽऋषयश्चये ॥९॥
यत्पुरुषंव्यदधुः कतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासीत्किम्बाहूकिमू
रूपादाऽउच्येते ॥१०॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः ॥ ऊरू
तदस्ययद्वैश्यः पद्भ्याꣳशूद्रोऽअजायत ॥११॥ चन्द्रमामनसोजात

श्चक्षोः सूर्य्यो॑ऽअजायत ॥ श्रोत्राद्वायुश्च॑प्प्राणश्च॒मुखादग्निरजाय
त ॥१२॥ नाब्भ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौः॑समवर्त्तत ॥ पद्भ्या
म्भूमिर्दिशः श्रोत्रात्तथालोकाँ२॥ऽअकल्प्पयन् ॥१३॥ यत्पुरुषेणहविषादे
वायज्ञमतन्न्वत ॥ व्वसन्तोऽस्यासीदाज्ज्यङ्ग्रीष्मऽइद्ध्मः॑शरद्धविः॑ ॥१४॥
सप्प्तास्यासन्न्परिधयस्त्रिः॑सप्प्तसमिधः॑कृताः॑ ॥ देवायद्यज्ञन्तन्न्वानाऽ
अबद्ध्नन्न्पुरुषम्प्पशुम् ॥१५॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथ
मान्न्यासन् ॥ तेहनाकम्महिमानः॑सचन्तयत्रपूर्व्वेसाद्ध्याः॑सन्तिदेवाः॑ ॥१६॥
अद्भ्यः॑सम्भृतः । पृथिव्व्यैरसाच्चव्विश्श्वकर्म्मणःसमवर्त्तताग्ग्रे ॥ तस्य
त्त्वष्टाव्विदधद्रूपमेतितन्न्मर्त्त्यस्यदेवत्त्वमाजानमग्ग्रे ॥१७॥ व्वेदाहमेतम्पु
रुषम्महान्तमादित्त्यवर्ण्णन्तमसःपरस्तात् ॥ तमेवव्विदित्त्वातिमृत्त्युमेति
नान्न्यः॑पन्थाव्विद्यतेयनाय ॥१८॥ प्रजापतिश्चरतिगर्ब्भेऽअन्तरजायमा

नोबहुधाव्विजायते ॥ तस्ययोनिम्परिपश्श्यन्तिधीरास्त्तस्मिन्हतस्थुर्ब्भुवनानिव्विश्श्वा ॥१९॥ योदेवेब्भ्यऽआतपतियोदेवानाम्पुरोहितः ॥ पूर्व्वोयोदेवेब्भ्योजातोनमोरुचायब्ब्राह्मये ॥२०॥ रुचम्ब्राह्मञ्जनयन्तोदेवाऽअग्ग्रेतदब्ब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोव्विद्द्यात्तस्यदेवाऽअसन्वशे ॥२१॥ श्रीश्श्चतेलक्ष्मीश्श्चपत्क्न्यावहोरात्रेपार्श्श्वेनक्क्षत्राणिरूपमश्श्विनौव्व्यात्तम् ॥ इष्ष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाण ॥२२॥

इति श्रीरुद्रे द्वितीयोऽध्यायः ॥२॥

हरिः ॐ आशुश्शिशानोव्वृषभोनभीमोघनाघनश्क्षोभणश्श्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽएकवीरश्शतᳬसेनाऽअजयत्त्साकमिन्द्रः ॥१॥ सङ्क्रन्देनानिमिषेणजिष्ष्णुनायुत्त्कारेणदुश्श्च्यवनेनधृष्ष्णुना ॥ तदिन्द्रेणजय

तत्त्सँहद्ध्वं युधोनरऽइषुहस्त्तेनव्वृष्ण्णा ॥ २ ॥ सऽइषुहस्त्तैः सनिषङ्गिभिर्व्वशीसᳬस्त्रष्टासयुधऽइन्द्रोगणेन ॥ सᳬसृष्ट्टजित्त्सोमपाबाहुशर्द्ध्युग्ग्रधन्न्वाप्प्रतिहिताभिरस्त्ता ॥ ३ ॥ बृहस्प्पतेपरिदीयारथेनरक्षोहामित्राँ२ ॥ऽअपबाधमानः ॥ प्प्रभञ्जन्त्सेनाः प्प्रमृणोयुधाजयन्न्नस्म्माकमेद्ध्यविताराथानाम् ॥ ४ ॥ बलविज्ञायस्त्थविरः प्प्रवीरः सहस्वान्न्वाजीसहमानऽउग्ग्रः ॥ अभिवीरोऽअभिसत्त्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ५ ॥ गोत्रभिदङ्गोविदंव्वज्ज्रबाहुञ्जयन्तमज्ज्मप्प्रमृणन्तमोजसा ॥ इमᳬसजाताऽअनुवीरयद्ध्वमिन्द्रᳬसखायोऽअनुसᳬरभद्ध्वम् ॥ ६ ॥ अभिगोत्राणिसहसागाहमानोदय्योव्वीरः शतमन्न्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाडयुद्ध्योस्म्माकᳬसेनाऽअवतुप्प्रयुत्त्सु ॥ ७ ॥ इन्द्रऽआसान्नेताबृहस्प्पतिर्द्दक्क्षिणायज्ञः पुरऽएतुसोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्ग्रम् ॥ ८ ॥ इन्द्रस्यव्वृष्ण्णो

व्वरुणस्यराज्ञऽआदित्त्यानाम्मरुताᳬंशर्द्धऽउग्ग्रम्॥ महामनसाम्भुवनच्च्यवानाङ्घोषोदेवानाञ्जयतामुदस्त्थात् ॥९॥ उद्धर्षयमघवन्नायुधान्युत्सत्त्वनाम्मामकानाम्मनाᳬंसि॥ उद्वृत्रहन्वाजिनांव्वाजिनान्युद्रथानाञ्जयताँव्यन्तुघोषाः ॥१०॥ अस्माकमिन्द्रःसमृतेषुध्वजेष्वस्माकंय्याऽइषवस्ताजयन्तु॥ अस्माकंव्वीराऽउत्तरेभवन्त्वस्माँ२ऽउदेवाऽअवताहवेषु ॥११॥ अमीषाञ्चित्तम्प्रतिलोभयन्तीगृहाणाङ्गान्यप्प्वेपरेहि॥ अभिप्रेहिनिर्द्दहहृत्सुशोकैरन्धेनामित्रास्तमसासचन्ताम् ॥१२॥ अवसृष्टापरापतशरव्ये ब्रह्मसᳬंशिते॥ गच्छामित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः ॥१३॥ प्रेताजयतानरऽइन्द्रोवःशर्म्मयच्छतु॥ उग्ग्रावःसन्तुबाहवोनाधृष्ष्यायथासथ।१४। असौयासेनामरुतःपरेषामभ्यैतिनऽओजसास्प्पर्द्धमाना॥ ताङ्गूहततमसापव्व्रतेनयथामीऽअन्योऽअन्यन्नजानन् ॥१५॥ यत्रबाणाःसम्पतन्तिकुमा

राव्विंशिखाऽइव॥ तन्नऽइन्द्रोबृहस्प्पतिरदितिः शर्म्मयच्छतुव्विश्श्वाहाशर्म्म यच्छतु ॥१६॥ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुव स्त्ताम् ॥ उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥१७॥

इति श्रीरुद्रे तृतीयोऽध्यायः ॥३॥

हरिः ॐ व्विब्भ्राड्बृहत्त्पिबतुसोम्म्यम्मद्ध्वायुर्द्दधद्यज्ञपतावविह्रुतम्॥ व्वातजूतोयोऽअभिरक्क्षतित्त्मनाप्प्रजाःपुपोषपुरुधाव्विराजति ॥१॥ उदुत्त्यञ्जातवेदसन्देवंव्वहन्तिकेतवः॥ दृशेव्विश्श्वायसूर्य्यम् ॥२॥ येना पावकचक्क्षसाभुरण्यन्तञ्जनाँ२ऽअनु ॥ त्वंव्वरुणपश्श्यसि ॥३॥ दैव्व्या वद्ध्वर्य्यूऽआगतद्ध्रथेनसूर्य्यत्त्वचा । मद्ध्वायज्ञꣳसमञ्जाथे ॥ तम्प्रत्क्नथाऽयंव्वेनश्चित्रन्देवानाम् ॥४॥ तम्प्रत्क्नथापूर्व्वथाव्विश्श्वथेमथाज्ज्येष्ठ

तांतिम्बर्हिषदंᳩस्वर्व्विदम् ॥ प्रतीचीनंव्वृजनन्दोहसेधुनिमाशुञ्जयन्तमनु यासुव्वर्द्धसे ॥५॥ अयंव्वेनश्चोदयत्पृश्निगर्ब्भाज्ज्योतिर्ज्जरायूरजसोव्विमाने ॥ इममपाᳩसङ्गमेसूर्य्यस्यशिशुन्नव्विप्रामतिभीरिहन्ति ॥६॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यव्वरुणस्याग्ग्नेः ॥ आप्प्राद्यावापृथिवीऽअन्तरिक्षᳩसूर्य्यऽआत्मा जगतस्तस्थुषश्च ॥७॥ आनऽइडाभिर्व्विदथेसुशस्तिव्विश्वानरःसवितादेवऽएतु ॥ अपियथायुवानोमत्सथानोव्विश्वञ्जगदभिपित्वेमनीषा ॥८॥ यदद्यकच्चव्वृत्रहन्नुदगाऽअभिसूर्य्य ॥ सर्व्वन्तदिन्द्रतेव्वशे ॥९॥ तरणिर्व्विश्वदर्शतोज्ज्योतिष्कृदसिसूर्य्य ॥ व्विश्वमाभासिरोचनम् ॥१०॥ तत्सूर्य्यस्यदेवत्त्वन्तन्महित्त्वम्मद्ध्याकर्त्तोर्व्विततᳩसञ्जभार ॥ यदेदयुक्तहरितःसधस्थादाद्रात्रीव्वासस्तनुतेसिमस्मै ॥११॥ तन्मित्रस्यव्वरुणस्याभिचक्षेसूर्य्योरूपङ्कृणुतेद्योरुपस्थे ॥ अनन्त

म॒न्न्यद्रु॒शदस्य॒पाजः॑कृ॒ष्ष्णम॒न्न्यद्धु॒रित॑ᳪसम्भरन्ति ॥१२॥ बण्णम॒हाँ२ऽअसिसूर्य्य॒बडादित्त्यम॒हाँ२ऽअसि ॥ म॒हस्त्तेस॒तोमहि॒मापनस्यते॒द्धादेवम॒हाँ२ऽअसि ॥१३॥ बट्ट्सू॒र्य्य॒श्श्रवसामहाँ२ऽअसिस॒त्रादेवम॒हाँ२ऽअसि ॥ म॒ह्नादे॒वानामसुर्य्यः॑पुरोहितोव्वि॒भुज्ज्योति॒रदाब्भ्यम् ॥१४॥ श्रायन्तऽइव॒सूर्य्यं॒व्विश्श्वेदिन्द्रस्यभक्क्षत ॥ व्वसूनिजा॒तेजनमान॒ऽओजसा॒प्प्रतिभा॒गन्नदीधिम ॥१५॥ अ॒द्द्यदेवा॒ऽउदिता॒सूर्य्यस्य॒निरᳪहसः॑पिपृतानिरव॒द्द्यात् ॥ तन्नोमि॒त्रोव्वरुणोमामहन्त्ता॒मदिति॒ः॑सिन्धुः॑पृथि॒वीऽउ॒तद्यौः ॥१६॥ आकृ॒ष्ष्णेन॒रजसा॒व्वर्त्तमानोनिवे॒शयन्न॒मृतम्मर्त्त्यञ्च ॥ हि॒रण्ण्ययेनसवि॒तारथे॒नादे॒वोयाति॒भुवनानि॒पश्श्यन् ॥१७॥

इति श्रीरुद्रे चतुर्थोऽध्यायः ॥४॥

हरिः ॐ नमस्तेरुद्रमन्न्यवऽउतोतऽइषवेनमः बाहुब्भ्यामुततेनमः ॥१॥ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्न्वाशन्तमयागिरिशन्ताभि चाकशीहि ॥२॥ यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे ॥ शिवाङ्गिरित्रताङ्कुरुमाहिꣳसीः पुरुषञ्जगत् ॥३॥ शिवेनव्वचसात्त्वागिरिशाच्छाव्वदामसि ॥ यथानः सर्व्वमिज्जगदयक्ष्मꣳ सुमनाऽअसत् ॥४॥ अद्ध्यवोचदधिवक्ता प्प्रथमोदैव्व्योभिषक् ॥ अहीँश्च सर्व्वाञ्जम्भयन्त्सर्व्वाँश्चयातुधान्न्योधराचीः परासुव ॥५॥ असौयस्ताम्म्रोऽअरुणऽउतबब्भ्रुः सुमङ्गलः ॥ येचैनꣳरुद्राऽअभितोदिक्क्षुश्रिताः सहस्रशोवैषाꣳहेडऽईमहे ॥६॥ असौयोवसर्प्पतिनीलग्ग्रीवोव्विलोहितः ॥ उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यः सदृष्टोमृडयातिनः ॥७॥ नमोस्तुनीलग्ग्रीवायसहस्राक्क्षायमीढुषे ॥ अथोयेऽअस्यसत्त्वानोहन्तेब्भ्योकरन्नमः ॥८॥ प्रमुञ्चधन्न्वनस्त्वमुभयोरात्क्र्योज्ज्याम् ॥

याश्च्वतेहस्त्तऽइषवꣳपराताभगवोव्वप ॥९॥ व्विज्ज्यन्धनुः कपर्द्दिनोव्विशल्ल्योबाणवाँ२ऽउत ॥ अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः ॥१०॥ यातेहेतिर्म्मीढुष्टमहस्त्तेबभूवतेधनुः ॥ तयास्म्मान्न्विश्श्वतस्त्वमयक्ष्मयापरिभुज ॥११॥ परितेधन्न्वनोहेतिरस्म्मान्न्वृणक्तुव्विश्श्वतः ॥ अथोयऽइषुधिस्तवारेऽअस्म्मन्निधेहितम् ॥१२॥ अवतत्त्यधनुष्ट्वꣳसहस्त्राक्क्षशतेषुधे ॥ निशीर्य्यशल्ल्यानाम्मुखाशिवोनःसुमनाभव ॥१३॥ नमस्तऽआयुधायानाततायधृष्ष्णवे ॥ उभाब्भ्यामुततेनमोबाहुब्भ्यान्तवधन्न्वने ॥१४॥ मानोमहान्तमुतमानोऽअर्ब्भकम्मानऽउक्क्षन्तमुतमानऽउक्क्षितम् ॥ मानोव्वधीःपितरम्मोतमातरम्मानःप्प्रियास्तन्न्वोरुद्द्ररीरिषः ॥१५॥ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषः ॥ मानोव्वीरान्नुद्द्रभामिनोव्वधीर्हविष्मन्तःसदमित्त्वाहवामहे ॥१६॥ पुनर्नमस्ते ॥१६॥ नमोहिरण्य

बाहवे ॥ सेनान्न्येदिशाञ्चपतयेनमोनमोव्वृक्षेब्भ्योहरिकेशेब्भ्यः पशूनाम्पतयेनमोनमः शष्प्पिञ्जरायत्त्विषीमतेपथीनाम्पतयेनमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमोनमोबब्भ्लुशाय ॥१७॥ नमोबब्भ्लुशायव्व्याधिनेन्नानाम्पतयेनमोनमोभवस्यहेत्त्यैजगताम्पतयेनमोनमोरुद्द्रायाततायिनेक्षेत्राणाम्पतयेनमोनमः सूतायाहन्त्यैव्वनानाम्पतयेनमोनमोरोहिताय ॥१८॥ नमोरोहिताय। स्त्थपतयेव्वृक्षाणाम्पतयेनमोनमोभुवन्तयेव्वारिवस्कृतायौषधीनाम्पतयेनमोनमोमन्त्रिणेव्वाणिजायकक्षाणाम्पतयेनमोनमऽउच्चैर्ग्घोषायाक्क्रन्दयतेपत्तीनाम्पतयेनमोनमः कृत्स्नायतया ॥१९॥ नमः कृत्त्स्नायतया। धावतेसत्त्वनाम्पतयेनमोनमः सहमानायनिव्व्याधिनऽआव्व्याधिनीनाम्पतयेनमोनमोनिषङ्गिणेककुभायस्तेनानाम्पतयेनमोनमोनिचेरवेपरिचरायारण्ण्यानाम्पतयेनमोनमोव्वञ्चते ॥२०॥ नमोव्वञ्चते। परिवञ्चतेस्त्तायूनाम्प

तयेनमोनमोनिषङ्गिणऽइषुधिमतेतस्कराणाम्पतयेनमोनमः सृकायिब्भ्यो
जिघाꣳसद्भ्योमुष्णताम्पतयेनमोनमोसिमद्भ्योनक्तञ्चरद्भ्योव्वि
कृन्तानाम्पतयेनमः ॥ २१ ॥ नमऽउष्णीषिणे। गिरिचरायकुलुञ्चानाम्पत
येनमोनमऽइषुमद्भ्योधन्वायिब्भ्यश्चवोनमोनमऽआतन्वानेब्भ्यः प्प्रतिद
धानेब्भ्यश्चवोनमोनमऽआयच्छद्भ्योस्यद्भ्यश्चवोनमोनमोव्विसृज
द्भ्यः ॥ २२ ॥ नमोव्विसृजद्भ्योव्विद्ध्यद्भ्यश्चवोनमोनमः स्वपद्भ्यो
जाग्ग्रद्भ्यश्चवोनमोनमः शयानेब्भ्यऽआसीनेब्भ्यश्चवोनमोनमस्तिष्ठ
द्भ्योधावद्भ्यश्चवोनमोनमः सभाब्भ्यः ॥ २३ ॥ नमः सभाब्भ्यः। सभा
पतिब्भ्यश्चवोनमोनमोश्श्वेभ्योश्श्वपतिब्भ्यश्चवोनमोनमऽआव्याधिनी
ब्भ्योव्विविद्ध्यन्तीब्भ्यश्चवोनमोनमऽउगणाब्भ्यस्तृꣳहतीब्भ्यश्चवोन
मोनमोगणेब्भ्यः ॥ २४ ॥ नमोगणेब्भ्यो । गणपतिब्भ्यश्चवोनमोनमोव्व्राते

भ्योव्व्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोव्वि
रूपेभ्योव्विश्वरूपेभ्यश्चवोनमोनमःसेनाभ्यः ॥२५॥ नमःसेनाभ्यः।
सेनानिभ्यश्चवोनमोनमोरथिभ्योऽअरथेभ्यश्चवोनमोनमःक्षतृभ्यः
सङ्ग्रहीतृभ्यश्चवोनमोनमोमहद्भ्योऽअर्भकेभ्यश्चवोनमः ॥२६॥
नमस्तक्षभ्यः । नमस्तक्षभ्योरथकारेभ्यश्चवोनमोनमःकुलालेभ्यः
कर्म्मारेभ्यश्चवोनमोनमोनिषादेभ्यःपुञ्जिष्ठेभ्यश्चवोनमोनमःश्वनि
भ्योमृगयुभ्यश्चवोनमोनमःश्वभ्यः ॥२७॥ नमःश्वभ्यः। श्वपति
भ्यश्चवोनमोनमोभवायचरुद्रायचनमःशर्व्वायचपशुपतयेचनमोनील
ग्ग्रीवायचशितिकण्ठायचनमःकपर्द्दिने ॥२८॥ नमःकपर्द्दिने। चव्युप्त
केशायचनमःसहस्राक्षायचशतधन्वनेचनमोगिरिशयायचशिपिविष्टा
यचनमोमीढुष्टमायचेषुमतेचनमोह्रस्वाय ॥२९॥ नमोह्रस्वाय। चव्वाम

ना॑य च॒ नमो॑ बृह॒ते च॒ व्वर्षी॑यसे च॒ नमो॑ व्वृ॒द्धाय॑ च स॒वृधे॑ च॒ नमो॒ग्ग्र्या॑य च प्प्रथ॒माय॑ च॒ नम॑ऽआ॒शवे॑ ॥ ३० ॥ नम॑ऽआ॒शवे॑। चाजि॒राय॑ च॒ नम॒श्शीघ्घ्र्या॑य च॒ शीब्भ्या॑य च॒ नम॒ऽऊर्म्म्या॑य चावस्व॒न्न्या॒य च॒ नमो॑ नादे॒याय॑ च॒ द्द्वीप्प्या॑य च ॥ ३१ ॥ नमो॑ ज्ज्ये॒ष्ठाय॑। च कनि॒ष्ठाय॑ च॒ नम॑: पूर्व्व॒जाय॑ चापर॒जाय॑ च॒ नमो॑ मद्ध्य॒माय॑ चापग॒ल्भाय॑ च॒ नमो॑ जघ॒न्न्या॒य च बु॒ध्न्या॒य च॒ नम॒स्सोब्भ्या॑य ॥ ३२ ॥ नम॒स्सोब्भ्या॑य। च प्प्रतिस॒र्य्या॒य च॒ नमो॒ याम्म्या॑य च॒ क्षेम्म्या॑य च॒ नम॒श्श्लोक्क्या॑य चावसा॒न्न्या॒य च॒ नम॑ऽउर्व्व॒र्य्या॒य च॒ खल्ल्या॑य च॒ नमो॒ व्वन्न्या॑य ॥ ३३ ॥ नमो॒ व्वन्न्या॑य। च॒ कक्क्ष्या॑य च॒ नम॑: श्श्र॒वाय॑ च प्प्रतिश्श्र॒वाय॑ च॒ नम॑ऽआ॒शुषे॑णाय चा॒शुर॑थाय च॒ नम॒श्शूरा॑य चावभे॒दिने॑ च॒ नमो॑ बि॒ल्मिने॑ ॥ ३४ ॥ नमो॑ बि॒ल्मिने॑। च कव॒चिने॑ च॒ नमो॑ व्व॒र्म्मिणे॑ च व्वरू॒थिने॑ च॒ नम॑: श्श्रु॒ताय॑ च श्श्रुतसे॒नाय॑ च॒ नमो॑ दुन्दु॒भ्भ्या॒य चाहन॒न्न्या॒य च॒ नमो॑ धृ॒ष्ण॑वे ॥ ३५ ॥ नमो॑ धृ॒ष्ण॑वे। च प्प्रमृ॒शाय॑ च॒

नमोनिषङ्गिणेचेषुधिमतेचनमस्तीक्ष्णेषवेचायुधिनेचनमः स्वायुधायचसुध
न्वनेच ॥ ३६ ॥ नमः स्रुत्याय। चपथ्यायचनमः काट्यायचनीप्यायच
नमः कुल्यायचसरस्यायचनमोनादेयायचवैशन्तायचनमः कूप्याय ॥ ३७ ॥
नमः कूप्याय। चावट्यायचनमोवीध्र्यायचातप्यायचनमोमेघ्यायच
विद्युत्यायचनमोवर्ष्यायचावर्ष्यायचनमोवात्याय ॥ ३८ ॥ नमोवा
त्याय। चरेष्म्यायचनमोवास्तव्यायचवास्तुपायचनमः सोमायचरुद्रा
यचनमस्ताम्रायचारुणायचनमः शङ्गवे ॥ ३९ ॥ नमः शङ्गवे। चपशुपतये
चनमऽउग्रायचभीमायचनमोऽग्रेवधायचदूरेवधायचनमोहन्त्रेचहनीयसेच
नमोवृक्षेभ्योहरिकेशेभ्योनमस्ताराय ॥ ४० ॥ नमः शम्भवाय। चमयो
भवायचनमः शङ्करायचमयस्करायचनमः शिवायचशिवतरायच ॥ ४१ ॥
नमः पार्य्याय। चावार्य्यायचनमः प्रतरणायचोत्तरणायचनमस्तीर्थ्याय

यच॒कूल्ल्याय॑च॒नम॒ꣳशष्प्प्याय॑च॒फेन्न्याय॑च॒नम॑ꣳसिक॒त्त्या॒य ॥४२॥ नम॑ꣳ
सिक॒त्त्या॒य । चप्रवा॒ह्या॒यच॒नम॑ꣳकिꣳशि॒लाय॑चक्क्षय॒णाय॑च॒नम॑ꣳकप॒र्द्दिने
चपुल॒स्त्तयेच॒नम॑ऽइरि॒ण्ण्या॒यचप्प्रप॒त्थ्या॒यच॒नमो॒व्व्रज्ज्याय ॥४३॥ नमो॒
व्व्रज्ज्याय। च॒गोष्ठ्याय॑च॒नम॒स्त्तल्प्प्याय॑च॒गेह्याय॑च॒नमो॑हृद॒य्या॒यचनिवे॒ष्प्प्या॒
यच॒नम॒ꣳकाट्याय॑चगह्व्वरे॒ष्ठाय॑च॒नम॒ꣳशुष्क्क्याय॥४४॥ नम॒ꣳशुष्क्क्याय।
चहरि॒त्त्या॒यच॒नम॑ꣳपाꣳस॒व्व्या॒यचरज॒स्या॒यच॒नमो॒लोप्प्याय॑चोल॒प्प्या॒यच॒
नम॒ऽऊर्व्व्याय॑च॒सूर्व्व्याय॑च॒नम॑ꣳप॒र्ण्णाय ॥४५॥ नम॑ꣳप॒र्ण्णाय। चपर्ण्ण
श॒दाय॑च॒नम॑ऽउद्द्ग॒ुरमाणाय॑चाभिघ्न॒तेच॒नम॑ऽआखिद॒तेचप्प्रखिद॒तेच॒नम॑ऽ
इषुकृद्भ्द्ध्योधनु॒ष्कृद्भ्द्ध्यश्चवो॒नमो॒नमो॑वꣳकिरि॒केब्भ्यो॑दे॒वाना॒ꣳहृदयेब्भ्यो॒
नमो॑व्विचिन्न्व॒त्त्केब्भ्यो॒नमो॑व्विक्क्षिण॒त्त्केब्भ्यो॒नम॑ऽआनिर्ह॒तेब्भ्य॑ꣳ ॥४६॥
द्द्रापे॒ऽअन्धसस्प्पते॒दरि॑द्द्र॒नीललोहित । आ॒साम्प्रजाना॑मे॒षाम्प्पशू॒नाम्माभे॒र्म्मा

रोङ्मोचन्नः किञ्चनाममत् ॥४७॥ इमारुद्राय । तवसेकपर्दिनेक्षयद्वीराय प्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥४८॥ याते । रुद्रशिवातनूःशिवाविश्वाहाभेषजी ॥ शिवारुतस्यभेषजीतयानोमृडजीवसे ॥४९॥ परिनोरुद्रस्यहेतिर्वृणक्तुपरित्त्वेषस्यदुर्म्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयाय मृड ॥५०॥ मीढुष्टमशिवतमशिवोनःसुमनाभव ॥ परमेवृक्षऽआयुधन्निधायकृत्तिंवसानऽआचरपिनाकम्बिभ्रदागहि ॥५१॥ विकिरिद्रविलोहितनमस्तेऽअस्तुभगवः ॥ यास्तेसहस्रंहेतयोन्यमस्मन्निवपन्तुताः ॥५२॥ सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥ तासामीशानोभगवःपराचीनामुखाकृधि ॥५३॥ असङ्ख्यातासहस्राणियेरुद्राऽअधिभूम्याम् ॥ तेषांसहस्रयोजनेवधन्वानितन्मसि ॥५४॥ अस्मिन्महत्यर्णवेन्तरिक्षेभवाऽअधि ॥

तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥५५॥ नीलग्ग्रीवाःशितिकण्ठादिवꣳ रुद्राऽउपश्रिताः ॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥५६॥ नीलग्ग्रीवाःशितिकण्ठाःशर्वाऽअधःक्षमाचराः ॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥५७॥ येव्वृक्षेषु। शष्पिञ्जरानीलग्ग्रीवाव्विलोहिताः ॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥५८॥ येभूतानामधिपतयोव्विशिखासः कपर्द्दिनः ॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥५९॥ येपथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः ॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥६०॥ येतीर्त्थानिप्प्रचरन्तिसृकाहस्तानिषङ्गिणः ॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥६१॥ येन्नेषु। व्विविद्ध्यन्तिपात्रेषुपिबतोजनान् ॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥६२॥ यऽएतावन्तश्चभूयांᳯसश्चदिशोरुद्राव्वितस्त्थिरे॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि॥६३॥ नमोस्तु। रुद्रे

ब्भ्योयेदिवियेषांव्वर्षमिषवः ॥ तेब्भ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीची र्दशोदीचीर्दशोर्द्ध्वाः ॥ तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मो यश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥६४॥ नमोस्तु । रुद्रेब्भ्योयेन्तरिक्षे येषांव्वातऽइषवः ॥ तेब्भ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदीचीर्द शोर्द्ध्वाः॥ तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्चनोद्वेष्टि तमेषाञ्जम्भेदद्ध्मः ॥६५॥ नमोस्तुरुद्रेब्भ्योयेपृथिव्व्यांय्येषामन्नमिषवः ॥ तेब्भ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः॥ तेब्भ्यो नमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्चनोद्वेष्टितमेषाञ्जम्भे दद्ध्मः ॥६६॥

इति श्रीरुद्रे पञ्चमोऽध्यायः ॥५॥

पुनर्नमस्ते षोडशकं जप्त्वा॥ ॐ एषतेरुद्रभागश्सहस्वस्राम्बिकयातञ्जु
षस्वस्वाहैषतेरुद्रभागऽआखुस्तेपशुः॥१॥ अवरुद्रमदीमह्यवदेवन्त्र्यम्बक
म्॥ यथानोव्वस्यसस्करद्यथानःश्श्रेयसस्करद्यथानोव्व्यवसाययात्॥२॥
नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः॥ बाहुब्भ्यामुततेनमः॥१॥ यातेरुद्र
शिवातनूरघोरापापकाशिनी॥ तयानस्तन्न्वाशन्तमयागिरिशन्ताभिचाक
शीहि॥२॥ नतंव्विदाथयऽइमाजजानान्न्यद्युष्माकमन्तरम्बभूव॥ नीहारे
णप्प्रावृताजल्प्याचासुतृपऽउक्थशासश्चरन्ति॥१॥ व्विश्वकर्म्माह्यजं
निष्टदेवऽआदिद्गन्धर्वोऽअभवद्द्वितीयः॥ तृतीयःपिताजनितौषधीना
मपाङ्गर्ब्भंव्यदधात्पुरुत्रा॥२॥ मीढुष्टमशिवतमशिवोनःसुमनाभव॥ पर
मेव्वृक्षऽआयुधन्निधायकृत्तिंव्वसानऽआचरपिनाकम्बिभ्रदागहि॥१॥ व्वि
किरिद्रव्विलोहितनमस्तेऽअस्तुभगवः॥ यास्तेसहस्रंहेतयोन्न्यमस्म्म

न्निर्वपन्तुताः॥२॥ सहस्त्राणिसहस्त्रशोबाह्वोस्तवहेतयः॥ तासामीशानो भगवःपराचीनामुखाकृधि॥३॥ असङ्ख्यातासहस्त्राणियेरुद्राऽअधिभूम्याम्॥ तेषांसहस्त्रयोजनेवधन्वानितन्मसि॥४॥

व्वयꣳसोमव्व्रतेतवमनस्तनूषुबिभ्रतः॥ प्रजावन्तःसचेमहि॥१॥ एषतेरुद्रभागःसहस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्रभागऽआखुस्तेपशुः॥२॥ अवरुद्रमदीमह्यवदेवन्त्र्यम्बकम्॥ यथानोव्वस्यसस्करद्यथानः श्श्रेयसस्करद्यथानोव्व्यवसाययात्॥३॥ भेषजमसि। भेषजङ्गवेश्श्वायपुरुषायभेषजम्॥ सुखम्मेखायमेष्ष्यै॥४॥ त्र्यम्बकँय्यजामहेसुगन्धिम्पुष्टिवर्द्धनम्॥ उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात्॥ त्र्यम्बकँय्यजामहेसुगन्धिम्पतिवेदनम्॥ उर्व्वारुकमिवबन्धनादितोमुक्षीयमामुतः॥५॥ एतत्ते। रुद्रावसन्तेनपरोमूजवतोतीहि॥ अवततधन्वापिनाकावसःकृत्ति

वासाऽअहिंꣳसन्नःशिवोतीहि ॥६॥ त्र्यायुषञ्जमदग्ग्नेःकश्श्यपस्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥७॥ शिवोनामासिस्वधितिस्त्तेपितानमस्त्तेऽअस्तुमामाहिंꣳसीः ॥ निवर्त्तयाम्म्यायुषेन्नाद्द्यायपप्रजननायरायस्प्पोषायसुप्प्रजास्त्वायसुवीर्य्याय ॥८॥

इति श्रीरुद्रे षष्ठोऽध्यायः ॥६॥

हरिः ॐ व्विश्श्वतश्चक्षुरुतव्विश्श्वतोमुखोव्विश्श्वतोबाहुरुतव्विश्श्वतस्प्पात् ॥ सम्बाहुब्भ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥१॥ व्वाजश्चमेप्प्रसवश्चमेप्प्रयतिश्चमेप्प्रसितिश्चमेधीतिश्चमेक्क्रतुश्चमेस्वरश्चमेश्श्लोकश्चमेश्श्रवश्चमेश्श्रुतिश्चमेज्ज्योतिश्चमेस्वश्चमेयज्ञेनकल्प्पन्ताम् ॥२॥ प्राणश्चमेपानश्चमेव्व्यानश्चमेसुश्चमेचित्तञ्चमऽआधीतञ्चमेव्वाक्चमेमनश्च्चमेचक्षुश्च्चमेश्श्रोत्रञ्चमेदक्षश्च्चमेबलञ्चमेय

ज्ञेनकल्प्पन्ताम् ॥३॥ उग्ग्रश्श्च भीमश्श्च ध्वान्तश्श्च धुनिश्श्च ॥ सासह्वाँश्श्चा भियुग्ग्वाचव्विक्क्षिपः स्वाहा ॥४॥ अग्ग्निᳫं हृदयेनाशनिᳫं हृदयाग्ग्रेणपशुपतिङ्कृत्त्स्नहृदयेनभवँय्यक्क्ना ॥ शर्व्वम्मतस्न्नाब्भ्यामीशानम्मन्न्युनामहादेवमन्तःपर्शव्व्येनोग्ग्रन्देवंव्वनिष्ठुनाव्वसिष्ठहनुः शिङ्गीनिकोश्श्याब्भ्याम् ॥५॥ उग्ग्रँल्लोहितेनमित्रᳫं सौव्व्रत्त्येनरुद्द्रन्दौव्व्रत्त्येनेन्द्रम्प्रक्क्रीडेनमरुतोबलेनसाद्ध्यान्प्रमुदा ॥ भवस्यकण्ठ्यᳫं रुद्द्रस्यान्तःपाश्श्व्र्यम्महादेवस्ययकृच्छर्व्वस्यव्वनिष्ठुः पशुपतेः पुरीतत् ॥६॥ इमामेऽअग्ग्नऽइष्ट्टकाधेनवः सन्त्वेकाचदशचदशचशतञ्चशतञ्चसहस्त्रञ्चसहस्त्रञ्चायुतञ्चायुतञ्चनियुतञ्चनियुतञ्चप्प्रयुतञ्चार्ब्बुदञ्चन्न्यर्ब्बुदञ्चसमुद्द्रश्श्चमद्ध्यञ्चान्तश्श्चपरार्द्धश्श्चैतामेऽअग्ग्नऽइष्ट्टकाधेनवः सन्त्वमुत्राऽमुष्मिँल्लोके[1] ॥७॥ यतोयतः समीहसे

---

१. केचिदित उत्तर 'ऋचंवाचम्' इत्याद्यध्यायमेव पठन्ति। नैताष्टमादिकान्मन्त्रान्। स चाध्यायोऽग्रे दर्शितः।

सेततौनोऽअभयङ्कुरु ॥ शन्नः कुरुप्प्रजाब्भ्योभयन्नः पशुब्भ्यः ॥८॥ व्विश्श्वा
निदेवसवितर्द्दुरितानिपरासुव ॥ यद्भ्द्रन्तन्नऽआसुव ॥९॥ नमस्त्तेहरसेशो
चिषेनमस्त्तेऽअस्त्त्वर्चिषे ॥ अन्न्याँस्त्तेऽअस्म्मत्तपन्तुहेतयः पावकोऽअस्म्म
ब्भ्यꣳशिवोभव ॥१०॥ नमस्त्तेऽअस्त्तुव्विद्द्युतेनमस्त्तेस्त्तनयित्त्नवे ॥ नम
स्त्तेभगवन्नस्त्तुयतः स्वः समीहसे ॥११॥ पयः पृथिव्व्याम्पयऽओषधीषुपयो
दिव्व्यन्तरिक्षेपयोधाः ॥ पयस्वतीः प्प्रदिशः सन्त्तुमह्यम् ॥१२॥ व्विष्ष्णो
रराटमसिव्विष्ष्णोः श्नप्त्रेस्त्थोव्विष्ष्णोः स्यूरसिव्विष्ष्णोर्द्ध्रुवोसि ॥ व्वैष्ष्णव
मसिव्विष्ष्णवेत्त्वा ॥१३॥ अग्निर्द्देवताव्वातोदेवतासूर्य्योदेवताचन्द्रमादेव
ताव्वसवोदेवतारुद्द्रादेवतादित्त्यादेवतामरुतोदेवताव्विश्श्वेदेवादेवताबृहस्प्प
तिर्द्देवतेन्द्रोदेवताव्वरुणोदेवता ॥१४॥ द्यौः शान्न्तिरन्तरिक्षꣳशान्न्तिः पृथि
वीशान्न्तिरापः शान्न्तिरोषधयः शान्न्तिः ॥ व्वनस्प्पतयः शान्न्तिर्व्विश्श्वेदेवाः

शान्तिर्ब्ब्रह्मशान्तिꣳसर्व्वꣳशान्तिꣳशान्तिरेवशान्तिꣳसामाशान्तिरेधि ॥१५॥
मूर्द्धासिराड्ध्रुवासिधरुणाधर्त्र्यसिधरणी ॥ आयुषेत्त्वाव्वर्च्चसेत्त्वाकृष्ष्यै
त्त्वाक्षेमायत्त्वा ॥१६॥ ऋचंव्वाचम्प्रपद्द्येमनोयजुꣳप्प्रपद्द्येसामप्प्राणम्प्रप
द्द्येचक्क्षुꣳश्श्रोत्रम्प्रपद्द्ये ॥ व्वागोजः सहौजोमयिप्प्राणपानौ ॥१७॥ यन्मे
च्छिद्द्रञ्चक्क्षुषोहृदयस्यमनसोव्वातितृण्णम्बृहस्प्पतिर्म्मेतद्दधातु ॥ शन्नोभ
वतुभुवनस्ययस्प्पतिः ॥१८॥ भूर्ब्भुवꣳस्वः तत्सवितुर्व्वरेण्ण्यम्भर्ग्गोदेव
स्यधीमहि ॥ धियोयोनः प्प्रचोदयात् ॥१९॥ अपाम्फेनेननमुचेꣳशिरऽइन्द्रो
दवर्त्तयꣳ ॥ व्विश्श्वायदजयस्पृधः ॥२०॥ सोमोराजामृतꣳसुतऽऋजीषेणा
जहान्मृत्त्युम् ॥ ऋतेनसत्त्यमिन्द्रियंव्विपानꣳशुक्क्रमन्धसऽइन्द्रस्येन्द्रियमि
दम्पयोमृतम्मधु ॥२१॥ हिरण्णमयेनपात्रेणसत्त्यस्यापिहितम्मुखम् ॥ योसा
वादित्त्येपुरुषꣳसोसावहम् ॥२२॥ तच्चक्क्षुर्द्देवहितम्पुरस्त्ताच्छुक्क्रमुच्चरत् ॥

पश्श्यैमश॒रदः॑ श॒तञ्जीवैमश॒रदः॑ श॒तꣳश्शृणुयामश॒रदः॑ श॒तम्प्रब्ब्रवामश॒रदः॑ श॒तमदीनाः॑स्यामश॒रदः॑ श॒तम्भूयश्श्चश॒रदः॑ श॒तात् ॥२३॥ स्व॒स्त्तिन॒ऽइन्द्रो व्वृ॒द्धश्श्रवाः॑स्व॒स्त्तिनः॑ पू॒षाव्वि॒श्श्ववेदाः॑ ॥ स्व॒स्त्तिन॒स्त्तार्क्ष्यो॒ऽअरिष्टनेमिः॑ स्व॒स्त्तिनो॒बृह॒स्प्पतिर्द्दधातु ॥२४॥ मनोजूतिर्ज्जुषता॒माज्ज्यस्य॒बृह॒स्प्पतिर्य्य॒ज्ञमि॒मन्तनो॒त्त्वरिष्टँय्य॒ज्ञꣳसमि॒मन्दधातु ॥ व्विश्श्वेदे॒वासऽइ॒हमादयन्ता॒मोꣳम्प्रतिष्ठ ॥२५॥ नमः॑ शम्भ॒वायचमयोभ॒वायच॒नमः॑ शङ्क॒रायचमयस्क॒रायच॒नमः॑ शि॒वायचशि॒वतरायच ॥२६॥

इति षडङ्गरुद्रे सप्तमेऽध्याये शान्तिपाठः[1] ॥७॥

---

१. केचिदेतं सप्तममध्यायमपठित्वा ठग्रश्चेति सप्त, वाजश्चमे इत्याद्या एकोनविंशत् कण्डिकाश्च पठन्ति । ताश्च यथा :

हरिः ॐ उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च ॥ सासह्वांश्चाभियुग्वा च विक्षिपः स्वाहा ॥१॥ अग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना ॥ शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तः पर्शव्येनोग्रं देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम् ॥२॥ उग्रँल्लोहितेन । मित्रꣳ सौव्रत्येन रुद्रं दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा ॥ भवस्य कण्ठ्यꣳ रुद्रस्यान्तः पार्श्व्यं महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् ॥३॥ लोमभ्यः स्वाहा । लोमभ्यः स्वाहा त्वचे स्वाहा त्वचे स्वाहा लोहिताय स्वाहा लोहिताय स्वाहा मेदोभ्यः स्वाहा मेदोभ्यः स्वाहा माꣳसेभ्यः स्वाहा माꣳसेभ्यः स्वाहा स्नावभ्यः स्वाहा स्नावभ्यः स्वाहास्थभ्यः स्वाहाऽस्थभ्यः स्वाहा मज्जभ्यः स्वाहा मज्जभ्यः स्वाहा ॥ रेतसे स्वाहा पायवे स्वाहा ॥४॥ आयासाय स्वाहा ।

प्प्रायासायस्वाहासँय्यासायस्वाहाव्वियासायस्वाहोद्यासायस्वाहा ॥ शुचे
स्वाहाशोचतेस्वाहाशोचमानायस्वाहाशोकायस्वाहा ॥५॥ तपसेस्वाहात
प्प्यतेस्वाहातप्प्यमानायस्वाहातप्तायस्वाहाघर्म्मायस्वाहा ॥ निष्कृत्यैस्वा
हाप्प्रायश्चित्त्यैस्वाहाभेषजायस्वाहा ॥६॥ यमायस्वाहान्तकायस्वाहामृत्त्य
वेस्वाहा ॥ ब्रह्मणेस्वाहाब्ब्रह्महत्त्यायैस्वाहाव्विश्श्वेब्भ्योदेवेब्भ्यः स्वाहा
द्यावापृथिवीब्भ्याᳯस्वाहा ॥७॥

इति श्रीरूद्रे सप्तमोऽध्यायः ॥७॥

हरिः ॐ व्वाजश्श्चमेप्प्रसवश्श्चमेप्प्रयतिश्श्चमेप्प्रसितिश्श्चमेधीतिश्श्चमे
क्क्रतुश्श्चमेस्वरश्श्चमेश्श्लोकश्श्चमेश्श्रवश्श्चमेश्श्रुतिश्श्चमेज्ज्योतिश्श्चमेस्व
श्श्चमेयज्ञेनकल्प्पन्ताम् ॥१॥ प्राणश्श्च । मेपानश्श्चमेव्व्यानश्श्चमेसुश्श्चमेचि

त्तञ्चमऽआधीतञ्चमेव्वाक्चमेमनश्चमेचक्षुश्चमेश्श्रोत्रञ्चमेदक्षश्चमे
बलञ्चमेयज्ञेनकल्प्पन्ताम् ॥ २ ॥ ओजश्च। मेसहश्चमऽआत्क्माचमेतनू
श्चमेशर्म्मचमेव्वर्म्मचमेङ्गानिचमेस्त्थीनिचमेपरूꣳषिचमेशरीराणिचमआ
युश्चमेजराचमेयज्ञेनकल्प्पन्ताम् ॥ ३ ॥ ज्ज्यैष्ठ्यञ्च। मऽआधिपत्त्यञ्चमे
मन्न्युश्चमेभामश्चमेमश्चमेम्भश्चमेजेमाचमेमहिमाचमेव्वरिमाचमेप्प्रथिमा
चमेव्वर्षिमाचमेद्द्राघिमाचमेव्वृद्धञ्चमेव्वृद्धिश्चमेयज्ञेनकल्प्पन्ताम् ॥४॥
सत्त्यञ्च। मेश्रद्धाचमेजगच्चमेधनञ्चमेव्विश्श्वञ्चमेमहश्चमेक्क्रीडाचमेमोद
श्चमेजातञ्चमेजनिष्ष्यमाणञ्चमेसूक्तञ्चमेसुकृतञ्चमेयज्ञेनकल्प्पन्ताम् ॥५॥
ऋतञ्च। मेमृतञ्चमेयक्ष्मञ्चमेनामयच्चमेजीवातुश्चमेदीर्ग्घायुत्त्वञ्चमेनमित्रञ्च
मेभयञ्चमेसुखञ्चमेशयनञ्चमेसूषाश्चमेसुदिनञ्चमेयज्ञेनकल्प्पन्ताम् ॥६॥
यन्ताच। मेधर्त्ताचमेक्षेमश्चमेधृतिश्चमेव्विश्श्वञ्चमेमहश्चमेसंविच्चमेज्ञात्रं

ञ्चमेसूश्चमेप्प्रसूञ्चमेसीरञ्चमेलयश्चमेयज्ञेनकल्प्पन्ताम् ॥७॥ शञ्च। मे मयश्चमेप्प्रियञ्चमेनुकामश्चमेकामश्चमेसौमनसश्चमेभगश्चमेद्द्रविणञ्चमे भद्रञ्चमेश्श्रेयश्चमेव्वसीयश्चमेयशश्चमेयज्ञेनकल्प्पन्ताम्॥८॥ ऊर्क्च। मेसूनृताचमेपयश्चमेरसश्चमेघृतञ्चमेमधुचमेसग्ग्धिश्चमेसपीतिश्चमेकृषि श्चमेव्वृष्टिश्चमेजैत्रञ्चमऽऔद्भिद्यञ्चमेयज्ञेनकल्प्पन्ताम् ॥९॥ रयिश्च। मेरायश्चमेपुष्टञ्चमेपुष्टिश्चमेव्विभुचमेप्प्रभुचमेपूर्ण्णञ्चमेपूर्ण्णतरञ्चमेकु यवञ्चमेक्षितञ्चमेन्नञ्चमेक्षुच्चमेयज्ञेनकल्प्पन्ताम्॥१०॥ व्वित्तञ्च। मव्वे द्यञ्चमेभूतञ्चमेभविष्ष्यच्चमेसुगञ्चमेसुपत्थ्यञ्चमऽऋद्धञ्चमऽऋद्धिश्चमे क्लृप्तञ्चमेक्लृप्तिश्चमेमतिश्चमेसुमतिश्चमेयज्ञेनकल्प्पन्ताम् ॥११॥ व्व्रीहयश्च। मेयवाश्चमेमाषाश्चमेतिलाश्चमेमुद्गाश्चमेखल्वाश्चमे प्प्रियङ्गवश्चमेणवश्चमेश्यामाकाश्चमेनीवाराश्चमेगोधूमाश्चमेमसूराश्चमे

यज्ञेनकल्प्पन्ताम् ॥१२॥ अश्म्मांच। मेमृत्तिकाचमेगिरयश्श्चमेपर्व्वताश्श्चमे
सिकताश्श्चमेव्वनस्प्पतयश्श्चमेहिरण्ण्यञ्श्चमेयश्श्चमेश्श्यामञ्श्चमेलोहञ्श्चमेसीस
ञ्श्चमेत्रपुचमेयज्ञेनकल्प्पन्ताम् ॥१३॥ अग्निश्श्च। मऽआपश्श्चमेव्वीरुधश्श्चमऽ
ओषधयश्श्चमेकृष्टपच्च्याश्श्चमेकृष्टपच्च्याश्श्चमेग्ग्राम्म्याश्श्चमेपशवऽआर
ण्ण्याश्श्चमेव्वित्तञ्श्चमेव्वित्तिश्श्चमेभूतञ्श्चमेभूतिश्श्चमेयज्ञेनकल्प्पन्ताम् ॥१४॥
व्वसुच। मेव्वसतिश्श्चमेकर्म्मचमेशक्तिश्श्चमेर्त्थश्श्चमऽएमश्श्चमइत्त्याचमे
गतिश्श्चमेयज्ञेनकल्प्पन्ताम् ॥१५॥ अग्निश्श्च। मऽइन्द्रश्श्चमेसोमश्श्चमऽ
इन्द्रश्श्चमेसविताचमऽइन्द्रश्श्चमेसरस्वतीचमऽइन्द्रश्श्चमेपूषाचमऽइन्द्रश्श्चमे
बृहस्प्पतिश्श्चमऽइन्द्रश्श्चमेयज्ञेनकल्प्पन्ताम् ॥१६॥ मित्रश्श्च। मऽइन्द्रश्श्चमे
व्वरुणश्श्चमऽइन्द्रश्श्चमेधाताचमऽइन्द्रश्श्चमेत्त्वष्टाचमऽइन्द्रश्श्चमेमरुतश्श्चमऽ
इन्द्रश्श्चमेव्विश्श्वेचमेदेवाऽइन्द्रश्श्चमेयज्ञेनकल्प्पन्ताम् ॥१७॥ पृथिवीच।

मऽइन्द्रश्चमेन्तरिक्षञ्चमऽइन्द्रश्चमेद्यौश्चमऽइन्द्रश्चमेसमाश्चमऽइन्द्रश्चमे
नक्षत्राणिचमऽइन्द्रश्चमेदिशश्चमऽइन्द्रश्चमेयज्ञेनकल्पन्ताम् ॥१८॥
अꣳशुश्च।मेरश्मिश्चमेदाभ्यश्चमेधिपतिश्चमऽउपाꣳशुश्चमेन्तर्य्याम
श्चमऽऐन्द्रवायवश्चमेमैत्रावरुणश्चमऽआश्विनश्चमेप्प्रतिप्प्रस्थानश्चमे
शुक्क्रश्चमेमन्थीचमेयज्ञेनकल्पन्ताम्॥१९॥ आग्ग्रयणश्च। मेव्वैश्वदेव
श्चमेद्ध्रुवश्चमेव्वैश्वानरश्चमऽऐन्द्राग्गनश्चमेमहावैश्वदेवश्चमेमरुत्त्वती
याश्चमेनिष्केवल्ल्यश्चमेसावित्रश्चमेसारस्वतश्चमेपात्क्नीवतश्चमेहारि
योजनश्चमेयज्ञेनकल्पन्ताम्॥२०॥ स्स्रुचश्च। मेचमसाश्चमेव्वायव्व्यानिच
मेद्द्रोणकलशश्चमेग्ग्रावाणश्चमेधिषवणेचमेपूतभृच्चमऽआधवनीयश्चमे
व्वेदिश्चमेबर्हिश्चमेवभृथश्चमेस्वगाकारश्चमेयज्ञेनकल्पन्ताम् ॥२१॥
अग्निश्च। मेघर्म्मश्चमेर्कश्चमेसूर्य्यश्चमेप्प्राणश्चमेश्वमेधश्चमेपृथिवी

च्चमेदितिश्च्चमेदितिश्च्चमेद्यौश्च्चमेङ्गुलयꣳशक्करयोदिशश्च्चमेयज्ञेनकल्प्प
न्ताम्॥२२॥ व्व्रतञ्च। मऽऋतवश्च्चमेतपश्च्चमेसंवत्त्सरश्च्चमेहोरात्रेऽऊर्व्व
ष्ठीवेबृहद्रथन्तरेचमेयज्ञेनकल्प्पन्ताम्॥२३॥ एकाच। मेतिस्त्रश्च्चमेतिस्त्र
श्च्चमेपञ्चचमेपञ्चचमेसप्पतचमेसप्पतचमेनवचमेनवचमऽएकादशचमऽ
एकादशचमेत्रयोदशचमेत्रयोदशचमेपञ्चदशचमेपञ्चदशचमेसप्पतदशचमे
सप्पतदशचमेनवदशचमेनवदशचमऽएकविꣳशतिश्च्चमऽएकविꣳशतिश्च्च
मेत्रयोविꣳशतिश्च्चमेत्रयोविꣳशतिश्च्चमेपञ्चविꣳशतिश्च्चमेपञ्चविꣳशतिश्च्च
मेसप्पतविꣳशतिश्च्चमेसप्पतविꣳशतिश्च्चमेनवविꣳशतिश्च्चमेनवविꣳशतिश्च्च
मऽएकत्रिꣳशच्चमऽएकत्रिꣳशच्चमेत्रयस्त्रिꣳशच्चमेयज्ञेनकल्प्पन्ताम्।२४।
चतस्त्रश्च्च। मेष्टौचमेष्टौचमेद्द्वादशचमेद्द्वादशचमेषोडशचमेषोडशचमे
व्विꣳशतिश्च्चमेव्विꣳशतिश्च्चमेचतुर्व्विꣳशतिश्च्चमेचतुर्व्विꣳशतिश्च्चमेष्टा

विꣳशतिश्च मे॒ष्टाविꣳशतिश्च मे॒ द्वात्रिꣳशच्च मे॒ द्वात्रिꣳशच्च मे॒ षट्त्रिꣳशच्च मे॒ षट्त्रिꣳशच्च मे चत्वारि॒ꣳशच्च मे॒ चत्वारि॒ꣳशच्च मे॒ चतुश्चत्वारिꣳशच्च मे॒ चतुश्चत्वारिꣳशच्च मे॒ष्टाचत्वारिꣳशच्च मे य॒ज्ञेन कल्पन्ताम्। २५। त्र्यविश्च। मे त्र्य॒वी च मे दित्य॒वाट् च मे दित्यौ॒ही च मे॒ पञ्चाविश्च मे पञ्चा॒वी च मे त्रिव॒त्सश्च मे त्रिव॒त्सा च मे तुर्य्य॒वाट् च मे तुर्य्यौही च मे य॒ज्ञेन कल्पन्ताम्। २६। प॒ष्ठवाट् च। मे पष्ठौही च मऽउ॒क्षा च मे व॒शा च म ऋष॒भश्च मे वे॒हच्च मे न॒ड्वाँश्च मे धे॒नुश्च मे य॒ज्ञेन कल्पन्ताम्। २७। ( न. ) वाजाय॒ स्वाहा। प्रस॒वाय॒ स्वाहापि॒जाय॒ स्वाहा॒ क्रतवे॒ स्वाहा॒ वसवे॒ स्वाहाहु॒र्प्पतये॒ स्वाहाह्ने मु॒ग्धाय॒ स्वाहा मु॒ग्धाय वैनꣳशि॒नाय॒ स्वाहा विन॒ꣳशिनऽआन्त्याय॒नाय॒ स्वाहान्त्याय भौव॒नाय॒ स्वाहा॒ भुवनस्य॒ पतये॒ स्वाहाधिपतये॒ स्वाहा प्र॒जापतये॒ स्वाहा॥ इयन्ते॒ राण्मि॒त्राय॒ य॒न्तासि॒ यमनऽऊ॒र्ज्जे त्वा॒ वृष्ट्यै त्वा प्र॒जानान्त्वाधिपत्त्या

य ॥२८॥ आयुर्य्यज्ञेन। कल्प्पताम्प्राणोयज्ञेनकल्प्पताञ्चक्षुर्य्यज्ञेनकल्प्पताᳬंश्श्रोत्रँय्यज्ञेनकल्प्पतांव्वाग्ग्यज्ञेनकल्प्पताम्मनोयज्ञेनकल्प्पतामात्क्मायज्ञेनकल्प्पताम्ब्रह्मायज्ञेनकल्प्पताञ्ज्योतिर्य्यज्ञेनकल्प्पताᳬंस्वर्य्यज्ञेनकल्प्पताम्पृष्ठँय्यज्ञेनकल्प्पताँय्यज्ञोयज्ञेनकल्प्पताम्॥ स्तोमश्चयजुश्चऽऋक्चसामचबृहच्चरथन्तरञ्च ॥ स्वर्द्देवाऽअगन्मामृताऽअभूमप्प्रजापतेः प्प्रजाऽअभूमव्वेट्ट्स्वाहा ॥२९॥

इति श्रीरूद्रे अष्टमोऽध्यायः ॥८॥

हरिः ॐ ऋचंव्वाचम्प्रपद्द्येमनोयजुः प्प्रपद्द्येसामप्प्राणम्प्रपद्द्येचक्षुः श्रोत्रम्प्रपद्द्ये॥ व्वागोजः सहौजोमयिप्प्राणापानौ ॥१॥ यन्मेच्छिद्द्रञ्चक्षुषोहृदयस्यमनसोव्वातितृण्णम्बृहस्प्पतिर्म्मेतद्दधातु ॥ शन्नोभवतुभुवनस्य

षस्प्पतिः ॥२॥ भूर्ब्भुवः स्वः । तत्त्सवितुर्व्वरेण्ण्यम्भर्ग्गोदेवस्य धीमहि ॥ धियोयोनःप्प्रचोदयात् ।३। कयान । श्चित्रऽआभुवदूतीसदावृधः सखा ॥ कयाशचिष्ठयाव्वृता ॥४॥ कस्त्वा । सत्योमदानाम्मᳪहिष्ठोमत्त्सदन्धसः ॥ दृढाचिदारुजेव्वसु ॥५॥ अभीषुणः ॥ सखीनामविताजरितॄणाम् ॥ शतम्भवास्यूतिभिः ।६। कयात्त्वन्नऽऊत्याभिप्प्रमन्दसेव्वृषन् ॥ कयास्तोतृभ्य्यऽआभर ॥७॥ इन्द्रोविश्श्वस्यराजति ॥ शन्नोऽअस्तुद्विपदेशञ्चतुष्प्पदे ॥८॥ शन्नोमित्रः शंव्वरुणः शन्नोभवत्त्वर्य्यमा ॥ शन्नऽइन्द्रोबृहस्पतिःश न्नोव्विष्ण्णुरुरुक्क्रमः ।९। शन्नोव्वातःपवताᳪशन्नस्तपतुसूर्य्यः ॥ शन्नः कनिक्क्रदद्देवः पर्ज्जन्न्योऽअभिवर्षतु ॥१०॥ अहानिशम्भवन्तुनः शᳪरात्रीः प्प्रतिधीयताम् ॥ शन्नऽइन्द्राग्ग्नीभवतामवोभिः शन्नऽइन्द्रावरुणारातहव्व्या ॥ शन्नऽइन्द्रापूषणाव्वाजसातौशमिन्द्रासोमासुवितायशंय्योः ॥११॥ शन्नोदे

वीरभिष्ट्टय ऽआपोभवन्तुपीतये ॥ शँय्योरभिस्रवन्तुनः ॥१२॥ स्योनापृ
थिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्प्रथाः ॥१३॥ आपो
हिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन॥ महेरणायचक्क्षसे॥१४॥ योवःशि
वतमोरसस्तस्यभाजयतेहनः॥ उशतीरिवमातरः॥१५॥ तस्म्माऽअरङ्ग
मामवोयस्यक्क्षयायजिन्न्वथ॥ आपोजनयथाचनः ॥१६॥ द्यौःशान्ति
रन्तरिक्क्षꣳशान्तिःपृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः॥ व्वनस्प्प
तयःशान्तिर्व्विश्श्वेदेवाःशान्तिर्ब्ब्रह्मशान्तिःसर्व्वꣳशान्तिःशान्तिरेवशान्तिः
सामाशान्तिरेधि ॥१७॥ दृतेदृꣳहमामित्रस्यमाचक्क्षुषासर्व्वाणिभूतानिस
मीक्क्षन्ताम् ॥ मित्रस्याहञ्चक्क्षुषासर्व्वाणिभूतानिसमीक्क्षे ॥ मित्रस्य
चक्क्षुषासमीक्क्षामहे ॥१८॥ दृतेदृꣳहमा। ज्योक्क्तेसन्दृशिजीव्व्यासञ्ज्यो
क्क्तेसन्दृशिजीव्वयासम्॥१९॥ नमस्ते। हरसेशोचिषेनमस्तेऽअस्त्वर्च्चि

षै ॥ अन्न्याँस्त्तेऽअस्म्मत्त्तपन्तुहेतयः पावकोऽअस्म्मब्भ्यꣳशिवोभव ।२०। नमस्त्तेऽ। अस्त्तुव्विद्द्युतेनमस्त्तेस्त्तनयित्क्नवे ॥ नमस्तेभगवन्नस्त्तुयतꣳ स्वः समीहसे ॥२१॥ यतोयतꣳसमीहसेततोनोऽअभयङ्कुरु ॥ शन्नः कुरु प्प्रजाब्भ्योभयन्नꣳपशुब्भ्यः ।२२। सुमित्त्रियानऽआपऽओषधयꣳसन्तुदुर्म्मित्त्रियास्त्तस्म्मैसन्तुयोस्म्मान्द्द्वेष्टियञ्च्चव्वयन्द्विष्म्मः ।२३। तच्चक्क्षुर्द्देवहितम्पुरस्त्ताच्छुक्क्रमुच्चरत् ॥ पश्श्येमशरदः शतञ्जीवेमशरदः शतꣳशृणुयामशरदः शतम्प्रब्ब्रवामशरदः शतमदीनाꣳस्यामशरदः शतम्भूयश्च्चशरदः शतात् ॥२४॥

इति श्रीरुद्रे शान्त्यध्यायः ॥

( ॐ साम्बसदाशिवोम् । ततः शम्भोरुत्तराङ्गपूजां विधाय कलशाभिषेकजलाभ्यां यजमानं सपरिजनमभिषिञ्चेयुः– )

हरिः ॐ स्वस्तिन ऽइन्द्रौव्वृद्धश्श्रवाः स्वस्तिनः पूषाव्विश्श्ववेदाः ॥ स्वस्तिनस्ताक्ष्र्यो ऽअरिष्टनेमिः स्वस्तिनोबृहस्प्पतिर्द्दधातु ॥१॥ पयः पृथिव्याम्पय ऽओषधीषुपयौदिव्व्यन्तरिक्षेपयोधाः ॥ पयस्वतीः प्प्रदिशः सन्तुमह्यम् ॥२॥ व्विष्ण्णोरराटमसिव्विष्ण्णोः श्नप्त्रेस्त्थोव्विष्ण्णोः स्यूरसिव्विष्ण्णोर्द्ध्रुवोसि ॥ व्वैष्ण्णवमसिव्विष्ण्णवेत्त्वा ॥३॥ अग्निर्द्देवताव्वातौदेवतासूर्य्यौदेवताचन्द्रमादेवताव्वसवोदेवतारुद्द्रादेवतादित्त्यादेवतामरुतौदेवताव्विश्श्वेदेवादेवताबृहस्प्पतिर्द्देवतेन्द्रौदेवताव्वरुणोदेवता ॥४॥ ( द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः । व्वनस्प्पतयः शान्तिर्व्विश्श्वेदेवाः शान्तिर्ब्ब्रह्मशान्तिः सर्व्वꣳ शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥१॥ तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्क्रमुच्चरत् ॥ पश्श्येमशरदः शतञ्जीवेमशरदः शतꣳ श्शृणुयामशरदः शतम्प्रब्ब्रवामशरदः

शतमदीनाःस्यामशरदः शतम्भूयश्चशरदः शतात् ॥ २ ॥ विश्वानिदेवस
वितर्दुरितानिपरासुव ॥ यद्भद्रन्तन्नऽआसुव ॥ ३ ॥ त्र्यम्बकँय्यजामहेसु
गन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्त्योर्म्मुक्षीयमामृतात् ॥ ४ ॥
सद्द्योजातम्प्रपद्द्यामिसद्द्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमाँ
भवोद्भवायनमः ॥ ५ ॥ व्वामदेवायनमोज्ज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमः
कालायनमः कलविकरणायनमोबलविकरणायनमोबलायनमोबलप्प्रम
थनायनमःसर्व्वभूतदमनायनमोमनोन्मनायनमः ॥ ६ ॥ अघोरेभ्योथघोरेभ्यो
घोरघोरतरेभ्यः ॥ सर्व्वेभ्यःसर्व्वशर्व्वेभ्योनमस्तेऽअस्तुरुद्ररूपेभ्यः ॥ ७ ॥
तत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ ८ ॥ ईशानः
सर्व्वविद्यानामीश्वरःसर्व्वभूतानाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा
शिवोमेऽअस्तुसदाशिवोम् ॥ ९ ॥ ॐ शिवोनामासिस्वधितिस्तेपितानमस्तेऽ

अस्तुमामाहिꣳसीः ॥ निर्वर्त्तयाम्म्यायुषेन्नाद्द्यायप्प्रजननायरायस्पोषायसुप्प्रजास्त्वायसुवीर्य्याय ।१०। व्विश्वानिदेवसवितर्द्दुरितानिपरासुव ॥ यद्भद्रन्तन्नऽआसुव ॥११॥ ॐ द्यौःशान्तिरन्तरिक्षꣳशान्तिः पृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः ॥ व्वनस्प्पतयःशान्तिर्व्विश्श्वेदेवाःशान्तिर्ब्ब्रह्मशान्तिः सर्व्वꣳशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि॥१२॥ ॐ सर्व्वेषांवाऽएषव्वेदानाꣳरसोयत्सामसर्व्वेषामेवैनमेतद्वेदानाꣳरसेनाभिषिञ्चति ॥१३॥ ॐ शान्तिः शान्तिः शान्तिः सुशान्तिर्भवतुसर्वारिष्टशान्ति र्भवतु ॥ ॐ अमृताभिषेकोऽस्तु ॥ इति ॥

पूर्वोक्तषडङ्गन्यासं कुर्यात् । उत्तराङ्गपूजां विधाय पुष्पाञ्जलिः—

ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्प्रथमान्न्यासन्। तेहनाकम्महिमानःसचन्तयत्रपूर्व्वेसाद्ध्याःसन्तिदेवाः ॥ ॐ राजाधिराजायप्रसह्यसा

हिनै। नमौवयंवैश्श्रवणायकुर्महे। समेकामान्कामकामायमह्यम्। कामे श्वरोवैश्श्रवणोददातु। कुबेरायवैश्श्रवणाय। महाराजायनमः। ॐ स्वस्ति। साम्राज्यंभौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यंमाहाराज्यमाधिपत्यमयंसमन्त पर्यायीस्यात्सार्वभौमःसार्वायुषआन्तादापरार्द्धात् ॥ पृथिव्यैसमुद्रपर्यन्ताया एकराडितितदप्येषश्लोकोभिगीतोमरुतः परिवेष्टारोमरुत्तस्यावसन्गृहे। आ विक्षितस्यकामप्रेर्विश्श्वेदेवाः सभासद इति ॥

ॐ व्विश्श्वतश्चक्षुरुतव्विश्श्वतोमुखोव्विश्श्वतोबाहुरुतव्विश्श्वत स्प्पात् ॥ सम्बाहुब्भ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥१॥ तत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥२॥

पुष्पादिकमादाय– ॐ आब्ब्रह्मन्ब्राह्मणोब्ब्रह्मवर्चसीजायतामा राष्ट्रेराजन्यःशूरऽइषव्व्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्व्वोढान

इड्वानाशुःसप्प्तिःपुरन्धिर्य्योषाजिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्य
व्वीरोजायतान्निकामेनिकामेनःपर्ज्जन्योव्वर्षतुफलवत्त्योनऽओषधयःपच्च्य
न्ताँय्योगक्क्षेमोनःकल्प्पताम् ॥ १ ॥ आयुष्यंव्वर्च्चस्यꣳरायस्पोषमौद्भिद्
दम् ॥ इदꣳहिरण्ण्यंव्वर्च्चस्वज्जैत्रायाविशतादुमाम् ॥ २ ॥ नतद्रक्षाꣳसि
नपिशाचास्त्तरन्तिदेवानामोजःप्प्रथमजꣳह्येतत्॥ योबिभर्तिदाक्क्षाय
णꣳहिरण्ण्यꣳसदेवेषुकृणुतेदीर्ग्घमायुःसमनुष्येषुकृणुतेदीर्ग्घमायुः ॥ ३ ॥
दीर्ग्घायुस्त्तऽओषधेखनितायस्म्मैचत्त्वाखनाम्म्यहम् ॥ अथोत्त्वन्दीर्ग्घायुर्भू
त्त्वाशतवल्शाव्विरोहतात् ॥४॥ पुनस्त्त्वादित्त्यारुद्राव्वसवःसमिन्धताम्पु
नर्ब्ब्रह्माणोव्वसुनीथयज्ञैः ॥ घृतेनत्त्वन्तन्न्वंव्वर्द्धयस्वसत्त्याःसन्तुयजमा
नस्यकामाः ॥५ ॥ मनसःकाममाकूतिंव्वाचःसत्त्यमशीय ॥ पशूनाꣳरूप
मन्नस्यरसोयशःश्रीःश्रयताम् ॥ ६ ॥ अग्ग्नेप्प्रेहिप्प्रथमोदेवयताञ्चक्क्षुर्द्देवा

नोमुतमर्त्यीनाम् ॥ इयंक्षमाणाभृगुभिᳬसजोषाᳬस्वर्ष्वन्तुयजमानाᳬ स्वस्ति ॥७॥

पुष्पादिकं यजमानाय प्रदाय रक्षासूत्रं बध्नीयात् ।

ॐ त्वँष्ष्वनिष्ठुदाशुषोनॄँपाहिशृणुधीगिरः रक्षातोकमुतत्क्मना ॥

येन बद्धो बलीराजा दानवेन्द्रो महाबलः ॥

तेनत्वामपि बध्नामि रक्षे मा चल मा चल ॥

अनेन पूजन-पूर्वकरुद्राभिषेककर्मणा कृतेन श्रीभवानीशङ्करमहारुद्रः प्रीयतां न मम ॥ ॐ सदाशिवार्पणमस्तु ॥